# संस्कृत-वाङ्मय का बृहद् इतिहास

## एकादश-खण्ड
## तन्त्रागम


प्रधान सम्पादक

पद्मभूषण आचार्य श्री बलदेव उपाध्याय

सम्पादक

प्रो. व्रजवल्लभ द्विवेदी





उत्तर प्रदेश संस्कृत संस्थान

लखनऊ

# संस्कृत वाङ्मय का बृहद् इतिहास

एकादश-खण्ड

तन्त्रागम

(तन्त्रागम, शैवागम, वैष्णवागम, शाक्तागम,
बौद्धतन्त्र एवं अन्य तांत्रिक सम्प्रदाय)

प्रधान सम्पादक

पद्मभूषण आचार्य बलदेव उपाध्याय

सम्पादक

प्रो. व्रजवल्लभ द्विवेदी



उत्तर प्रदेश संस्कृत संस्थान

लखनऊ

# संस्कृत वाङ्मय का बृहद् इतिहास

एकादश-खण्ड

तन्त्रागम

(तन्त्रागम, शैवागम, वैष्णवागम, शाक्तागम,
योगतंत्र एवं अन्य तांत्रिक सम्प्रदाय)

प्रधान सम्पादक

पद्मभूषण आचार्य बलदेव उपाध्याय

सम्पादक

प्रो. व्रजवल्लभ द्विवेदी

उत्तर प्रदेश संस्कृत संस्थान

लखनऊ

प्रकाशक :
डॉ. (श्रीमती) अलका श्रीवास्तव
निदेशक :
उत्तर प्रदेश संस्कृत संस्थान, लखनऊ




प्राप्ति-स्थान :
विक्रय विभाग :
उत्तर प्रदेश संस्कृत संस्थान, नया हैदराबाद,
लखनऊ-२२६००७

प्रथम संस्करण :
वि.सं. २०५३ (१९९७ ई.)
प्रतियाँ : ११००
मूल्य : रु. ३००/-(तीन सौ रुपये)


मुद्रक : शिवम् आर्ट्स, निशातगंज लखनऊ । दूरभाष : ३८६३८९

# पुरोवाक्

उत्तरप्रदेशसंस्कृतसंस्थानेन प्रकाशनाय संकल्पितस्य "संस्कृत वाङ्मय का बृहत् इतिहास" इत्याख्यस्याष्टादशखण्डात्मकस्य ग्रन्थस्य तन्त्रागमीये खण्डेऽस्मिन् द्वादश निबन्धाः समावेशिताः सन्ति। वैष्णवागमस्य वैखानसपाञ्चरात्रशाखासंबद्धौ द्वौ, शैवागमस्य पाशुपत-द्विविध-शैवसिद्धान्त-प्रत्यभिज्ञा-वीरशैवशाखासम्बद्धाः पञ्च, बौद्ध-जैनतन्त्रसंबद्धौ द्वौ, शाक्ततन्त्र(क्रम-कौल)-स्मार्ततन्त्रसंबद्धौ द्वौ, एकश्च पुराणवर्णितयोगतन्त्रसंबद्ध इत्येवमिमे निबन्धाः स्वस्वविषयेषु कृतभूरिपरिश्रमैर्विद्वद्भिर्निबद्धाः सन्ति।

भारतीयदर्शनानां भारतीयसाहित्यस्य चेतिहासं वर्णयन्तो बहवो ग्रन्थाः पाश्चात्त्यैः प्राच्यैश्च विद्वद्भिर्विरचिताः समुपलभ्यन्ते। तत्र न दृश्यते वर्णनं तन्त्रागमवाङ्मयस्य दर्शनस्य चेति चेखिद्यमानेन मया परमश्रद्धास्पदस्य महामहोपाध्याय-पद्मविभूषणादिनानाविरुदालङ्कृतस्य पण्डितश्रीगोपीनाथकविराजमहोदयस्य प्रेरणया मदीये हिन्दीभाषानिबद्धे "भारतीय दर्शन" इत्याख्ये ग्रन्थे तन्त्रागमसाहित्यदर्शनानां केषाञ्चन परिचयः प्रदत्त आसीत्, अधुना च तस्य ग्रन्थस्य नूतनतमसंस्करणे बौद्ध-जैनतन्त्राणि विहाय प्रायः सर्वासामेवोपर्युक्तानां तान्त्रिकशाखानां वाङ्मयस्य दर्शनस्य च सारगर्भः परिचयः समुपस्थापितः। संक्षेपरुचीनां कृतेऽद्यापि तदवदानभूतमास्ते।

तान्त्रिकवाङ्मयस्य वैष्णव-शैव-शाक्त-सौर-स्कान्द-गाणपत्यशाखानां परिचयः संक्षेपविस्तराभ्यां प्रथमतो डॉ. आर. जी. भाण्डारकरमहोदयेन स्वकीये "वैष्णविज्म, शैविज्म एण्ड अदर माइनर रिलीजियस सिस्टम्स" इत्याख्ये ग्रन्थे, तदनु च डॉ. एस. एन. दासगुप्तमहोदयेन पञ्चखण्डात्मके "हिस्ट्री आफ इण्डियन फिलॉसफी" इत्याख्ये ग्रन्थे प्रदत्तः। शर्मण्यदेशीयेन विदुषा डॉ. ओटो-श्रॉदर-महोदयेन स्वकीये "इण्ट्रोडक्शन टू दि पांचरात्र लिटरेचर एण्ड दि अहिर्बुध्न्यसंहिता" इत्याख्ये ग्रन्थे पाञ्चरात्रागमसाहित्यदर्शनयोः प्रामाणिकं विवरणमुपस्थापितम्। "अर्ली हिस्ट्री आफ दि वैष्णव सेक्ट" इत्याख्ये ग्रन्थे च डॉ. हेमचन्द्ररायचौधुरीमहोदयेन पाञ्चरात्रागमस्य प्राचीनता सविस्तरं सप्रमाणं साधिता। अधुना च डॉ. राधवप्रसादचौधरीमहोदयेन "पाञ्चरात्रागम" इत्याख्यो ग्रन्थो हिन्दीभाषायां निबद्धो बिहारराष्ट्रभाषापरिषदा पटनातः प्रकाशितः।

साम्प्रतमेव नैकैर्यूरोपीयैर्विद्वद्भिः सम्भूय नैकखण्डात्मकः "हिस्ट्री आफ इण्डियन लिटरेचर" इत्याख्य इतिहासग्रन्थः प्राकाश्यमानीतः। अत्रागमतन्त्रसाहित्यस्य परिचयः पृथक् पृथग् द्वयोः खण्डयोर्वर्तते। वैष्णवानां शैवानां च वाङ्मयस्यागमखण्डे शाक्ततन्त्राणां च समावेशस्तन्त्रखण्डे तत्र कृतो वर्तते। तेनोभयोः शास्त्रयोः पार्थक्यं तैः साध्यते, किन्तु नैतत् समुचितम्, नैकेषु स्थलेषु तन्त्रागमशब्दयोः पर्यायत्वेन प्रयुक्तत्वात्, विषयसाम्याच्च। मृगेन्द्रागमो मृगेन्द्रतन्त्रमिति, पाद्मसंहिता पाद्मतन्त्रमिति, सात्वतसंहिता सात्वततन्त्रमिति, पारमेश्वरागमः पारमेश्वरतन्त्रमिति च नाम्ना तत्र तत्र स्मर्यते।

तन्त्रागमशब्दयोः, निगमागमपदयोर्वा पृथक् पृथङ्निर्वचनं परिभाषां विषयविभागं चामनन्ति विद्वांसः। तदेतत्सर्वं पराक्कालिकं वाङ्मयं गर्भीकरोति, न प्राचीनम्। आगमपदस्य शोभना सर्वसम्मता च परिभाषाऽभिनवगुप्तेन तन्त्रालोके (३५. १-२) प्रदत्ता, व्याकृता च सा तत्र तत्र तेन, किन्तु ततोऽपि पूर्वतनेन वाचस्पतिमिश्रेण योगभाष्यटीकायां तत्त्ववैशारद्यां प्रदत्ता तस्य पदस्य व्युत्पत्तिरेषा दर्शनार्हा—"आगच्छन्ति बुद्धिमारोहन्ति यस्मादभ्युदयनिश्रेयसोपायाः स आगमः"। एतच्च सर्वमस्मदीये "भारतीय दर्शन" इत्यस्य ग्रन्थस्य नूतनतमे संस्करणे (ई. १९९१, पृ. ४३२-४३४) द्रष्टव्यम्। एतत्सर्वमुपेक्ष्य म.म. भारतरत्न-पी.वी.काणेमहोदयेन स्वकीयस्य महनीयस्य "हिस्ट्री आफ धर्मशास्त्र" इत्यस्य ग्रन्थस्य तन्त्रविषयके खण्डे, साम्प्रतमेव कलिकालातः प्रकाशितयोर्ग्रन्थयोः श्रीमद्भ्यां भट्टाचार्य-बनर्जीमहोदयाभ्यां च तन्त्रपदस्य संकीर्णा परिभाषा प्रदत्ता यन्मारणमोहनादिषट्कर्मणां मकारत्रयस्य मकारपञ्चकस्य वा प्रकाशका ग्रन्था एव तन्त्रपदाभिलप्या इति, यद्यपि सर्वैरेतैः प्राचीनानामागमग्रन्थानां परिचयः प्रदत्त एव। अत्र यद्वक्तव्यं तदस्य खण्डस्य सम्पादकेन श्रीमता पण्डितव्रजवल्लभद्विवेदिना 'आगम और तन्त्रशास्त्र" (पृ. १-६) इत्याख्ये ग्रन्थे उक्तमिति नात्र वितन्यते। एवं च समानप्रकृतिकमेतद् विशालं वाङ्मयमागमपदेन तन्त्रपदेन वा यथेच्छं व्यवहर्तुं शक्यते। अत एवास्माभिः कश्चन विभ्रमो मा भूदिति तन्त्रागमपदेन व्यवहृतोऽयं खण्डः, अत्र च सर्वास्तन्त्रागमशाखाः संगृहीताः; यासां परिचयः पूर्वमेवास्माभिः संक्षेपेण पूर्वोक्ते ग्रन्थे प्रदत्त आसीत्।

खण्डेऽस्मिन् सर्वप्रथमं वैष्णवागमीयवैखानसपाञ्चरात्रशाखाभ्यां संबद्धौ निबन्धौ संनिवेशितौ। तत्र वैखानसागमः कृष्णयजुर्वेदीयया औखेयशाखया संबद्धः, पाञ्चरात्रागमश्च एकायनशाखयेत्यामनन्ति तज्ज्ञा विद्वांसः। छान्दोग्योपनिषदनुसारमेकायनविद्या नारदेनाधीताऽऽसीत्। शुक्लयजुर्वेदीयया काण्वशाखया तदभिन्नतां साधयन्ति केचन। एवं द्वयोरपि शाखयोर्वेदमूलकत्वे सिद्धेऽपि वैखानसागमा वेदानां सार्वात्म्येन प्रामाण्यमूरीकुर्वन्ति, तत्रैव कासुचन पाञ्चरात्रसंहितासु वेदविरुद्धा अप्यंशा विद्यन्त इति ते पाञ्चरात्राधिकरणभाष्ये भगवत्पादशङ्कराचार्यैः प्रतिक्षिप्ताः, वैष्णवाचार्यैश्चानुमोदितास्त इति तेषु तेषु ब्रह्मसूत्रभाष्येषु, यामुनाचार्यादिविरचितेष्वागमप्रामाण्यादिषु द्रष्टव्यम्। रामानुजमाध्वमतयोः साम्यं वैषम्यं च प्रदर्शयता सायणेन स्वकीये सर्वदर्शनसंग्रहे पाञ्चरात्रप्रामाण्यमुभयसंमतमित्युक्तम्।

अत्र वैखानसागमीया ग्रन्थाः स्वल्पा एव समुपलभ्यन्ते। ते च प्रायस्तिरुपतिनगरतः प्रकाशिताः। श्रीपर्वतस्थितवेङ्कटेश्वरभगवत उत्तरभारते 'बालाजी' नाम्ना प्रथिते देवमन्दिरे वैखानसागमपद्धत्या देवार्चनं भवति, श्रीरङ्गम्-प्रभृतिस्थलेषु च पाञ्चरात्रपद्धत्या। वैखानसीयनिबन्धस्य लेखको डॉ. राघवप्रसादचौधरी बहूनि वर्षाणि यावत् तत्रत्ये संस्कृतविद्या-पीठेऽध्यापयन् स्वयं वैखानसागमानधीतवान्। अधुना स जम्मूनगरस्थे रणवीरसंस्कृतविद्यापीठे प्राचार्य(प्रिंसिपल)पदमलङ्करोति। एवमेव पाञ्चरात्रागमीयनिबन्धस्य लेखको डॉ. अशोककुमार-कालिया पाञ्चरात्रागमीयं लक्ष्मीतन्त्रमधिकृत्य शोधव्यापृतो दक्षिणभारतीययात्रां व्यदधात्।

साम्प्रतं स लक्ष्मणपुर(लखनऊ)विश्वविद्यालये संस्कृतविभागे प्रवाचक(रीडर)पदमध्यास्ते। तदाभ्यां सज्जीकृतयोर्निबन्धयोः पाञ्चरात्रवैखानसमतयोः साम्यवैषम्यविषये न किमप्युक्तमासीदिति पाठकानां सौविध्यायास्माभिः सम्प्रेरितः श्रीमान् डॉ. राघवप्रसादचौधरी कार्यमेतत् सम्यक् सम्पादितवान्। उभाभ्यामपि विद्वद्भ्यां वैखानसपाञ्चरात्रागमयोः साहित्यस्य, दर्शनस्य, उपासनापद्धतेश्च सम्यक् परिचयः प्रदत्तः।

वैदिकवाङ्मये प्राचीनेषु शिलाशासनादिषु च पाञ्चरात्रपाशुपतमते चर्चिते इति जानन्त्येव विद्वांसः। गुजरातराज्ये बटोदर(बड़ोदा)नगरं निकषा स्थितं कारवणग्रामं शैवयोगाचार्येष्वन्तिमो लकुलीशः स्वजनुषा समलञ्चकारेति तत्रत्यः प्रथितो विद्वान् डॉ. ए.एन. जानीमहोदयस्तत्रत्यस्य शोधसंस्थानस्य निदेशकचरः प्रार्थित आसीत्। अध्यात्मरुचिना तेन साम्प्रतमीदृशेभ्यो लौकिककार्येभ्यो विरामो गृहीत इति परिज्ञाय खण्डस्यास्य सम्पादकेन श्रीमता पण्डितव्रजवल्लभ-द्विवेदिना सोऽयं भारः स्वयं गृहीतः। एवमेव शैवसिद्धान्तविषयेऽपि शैवागमानां प्रथितो विद्वान् श्रीमान् ए. एन. भट्टमहोदयः पाण्डिचेरीस्थफ्रेंचशोधसंस्थाने शैवागमोद्धारनिरतः प्रार्थित आसीत्। सिद्धान्तशैवागमीयायाः शाखायाः संस्कृततमिलभाषयोर्निबद्धस्य सम्पूर्णस्य वाङ्मयस्य परिचयस्तत्रभवता समुपस्थापयिष्यत इति विचारितमासीत्। तत्रापि वयमसफलाः संजाता इति संस्कृतवाङ्मयं तमिलवाङ्मयं च विभज्य द्वौ विद्वांसावस्माभिः प्रेरितौ। तयोरेकः सम्पूर्णानन्दसंस्कृतविश्वविद्यालये वाराणसीस्थे शैवागमप्राध्यापको डॉ. शीतलाप्रसाद उपाध्यायः, अन्या च विदुषी डॉ. रमाघोषमहोदया शैवसिद्धान्तसंबद्धे तमिलवाङ्मये कृतभूरिश्रमा काशीस्थे आर्यकन्यामहाविद्यालये दर्शनशास्त्रमध्यापयन्ती वर्तते।

काश्मीरप्रत्यभिज्ञा-स्पन्द-त्रिकशास्त्रसंबद्धस्य निबन्धस्य लेखको विद्यतेऽस्य शास्त्रस्य प्रथितो विद्वान् काश्मीराभिजनः श्रीमान् डॉ. बलजिन्नाथपण्डितमहोदयः। "काश्मीर शैव दर्शन" इत्याख्यो हिन्दीभाषामयो ग्रन्थोऽन्ये च संस्कृतहिन्दीभाषामया महनीयाष्टीकाग्रन्था महानुभावेनानेन रचिताः। भारतराष्ट्रपतिना सत्कृतोऽसौ संस्कृतविद्वान् शैवागमकोशमपि विरचितवान्। वीरशैवधर्मदर्शनविषयकस्य निबन्धस्य निबन्धकाश्च सन्ति काशीज्ञानसिंहासनाधीश्वराः श्री १००८ डॉ. चन्द्रशेखरशिवाचार्यमहोदयाः। संस्कृत-हिन्दी-कन्नड़भाषासु नानाग्रन्थानां रचयितृभिरेभिः साम्प्रतं काशीस्थे जंगमवाड़ीमठे शैवागमशोधप्रतिष्ठानस्य स्थापना कृता, अल्पावधावेव ततो द्वादश ग्रन्थाश्च वीरशैवागमीयाः प्राकाश्यमानीताः।

क्रमकौलमतसंबद्धो निबन्धो डॉ. नवजीवनरस्तोगीमहोदयेन लिखितः। सोऽयं डॉ. कान्तिचन्द्रपाण्डेयमहोदयस्य शिष्यः, येन हि "अभिनवगुप्त : एन हिस्टोरिकल एण्ड फिलासफिकल स्टडी", "शैवदर्शनबिन्दुः" इत्याद्या नैके ग्रन्थाः संस्कृत-आङ्ग्लभाषामयाः, प्रत्यभिज्ञा-स्पन्द-त्रिक-क्रम-कुलमतसम्बन्धिनः सौन्दर्यशास्त्रसंबद्धाश्च स्वीयाः स्वतन्त्रा विचाराः प्रौढया भाषया प्रमाणपद्धत्या च पुरस्कृताः। स्वयं डॉ. नवजीवनरस्तोगिनाऽपि "क्रम तान्त्रिसिज्म इन कश्मीर शैविज्म" इत्याख्यो विशिष्टः प्रबन्धः, सम्पूर्णः सविवेकस्तन्त्रालोकश्च विस्तृतया भूमिकया प्रसाद्य प्रकाशितः।

स्मार्ततन्त्रसम्बन्धिनो विशेषतो दशमहाविद्यासंबन्धिनो निबन्धस्य लेखको वर्तते प्रयागस्थगङ्गानाथझाशोधसंस्थाने प्रवाचक(रीडर)पदे कार्यव्यापृतो डॉ. किशोरनाथझामहोदयः। अनेन विदुषा प्रथिताया महाकालसंहिताया भूमिकापरिशिष्टादिभिः सह चतुर्षु खण्डेषु सम्यक् सम्पादनं कृतम्। तदनेन विदुषा न्यायशास्त्रविषयका अपि ग्रन्थाः सम्यक् सम्पाद्य प्रकाश्यतामानीता इति प्राचीनां मिथिलाभूमिपरम्परामनुसरता न्यायदर्शनप्रवीणेन भगवती तारा सम्प्रदायपरम्परया समुपास्यत इति वैशिष्ट्यमस्य।

बौद्धतन्त्रसंबद्धो निबन्धः सारनाथस्थितकेन्द्रीयतिब्बती-उच्चशिक्षासंस्थानेन संचाल्यमाने "दुर्लभ बौद्ध ग्रन्थ शोध योजना" इति प्रविभागे वरिष्ठशोधसहायकपदे कार्यव्यापृतेन डॉ. बनारसीलालेन निबद्धः, यो हि टीकाद्वयसहिताया नामसंगीतेः सम्यक् सम्पादनं विधाय विद्यावारिधि(पीएच.डी.)पदवीं समधिगतवान्, तत एव प्रकाश्यमानायां 'धीः' इत्याख्यायां षाण्मासिक्यां शोधपत्रिकायां बहून् शोधनिबन्धान् लिखितवान्, अन्येषां च बौद्धतन्त्रग्रन्थानां सम्पादने महत्त्वाधायकं साहाय्यमाचरति। एवमेव जैनतन्त्रसंबद्धं निबन्धं सज्जीकृतवान् श्रीमान् डॉ. रुद्रदेवत्रिपाठी। साहित्यशास्त्रनिष्णातः कविवरो "मालवमयूरम्" इति संस्कृतप्रत्रिकायाः सम्पादकचरो दिल्लीस्थे लालबहादुरशास्त्रिसंस्कृतविद्यापीठे शोधाधिकारिरूपेण बहून् ग्रन्थान् सम्पादितवान्, तत्रत्यां शोधपत्रिकां च सम्यक् संचालितवान्। भगवत्यास्त्रिपुरसुन्दर्याः समुपासकेनानेन जैनतन्त्रेऽप्यद्भुतं प्रावीण्यमधिगतमिति तदीयेन निबन्धेनैव व्यक्तीभवति। केचन जैनाचार्या अपि भगवत्यास्त्रिपुरसुन्दर्या उपासका आसन्निति धर्माचार्यकृतलघुस्तवस्य सोमतिलकसूरिकृतव्याख्यासमन्वितस्य सम्पादकेन श्रीमता पद्मश्रीजिनविजयमुनिना निबद्धेन तत्रत्येन प्रास्ताविकेन ज्ञायते।

पुराणानि भारतीयज्ञानस्य विश्वकोशस्थानीयानीति जानन्त्येव विद्वांसः। अत्र तन्त्रागमयोगसंबद्धा विषया अपि प्रसङ्गवशादुपदिष्टाः सन्ति। "कूर्मपुराण : धर्म-दर्शन" इति शोधप्रबन्धस्य रचयित्र्या डॉ. करुणा एस. त्रिवेदिमहोदयया अहमदाबादविश्वविद्यालयतः 'पीएच.डी.' पदवी समधिगता। पुराणानि समनुशीलयन्त्या तया तन्त्रागमदर्शनयोगसम्बन्धिनोंऽशाः संगृहीता आसन्। तत्साहाय्येन तया "पुराणगत योग एवं तन्त्र" इति शीर्षको निबन्धः सज्जीकृतः। साम्प्रतमेषा गुजरातराज्ये साबरकांठाजनपदान्तर्गते 'ईडर' इत्याख्ये नगरे स्थिते महिलाकला-महाविद्यालये प्राध्यापक(लेक्चरर)पदमध्यास्ते। एवं संक्षेपेण परिचायिता एते सर्वे निबन्धलेखका धन्यवादशतैरस्माभिः सभाज्यन्ते।

वैखानसागमस्य परिचयोऽस्माभिरस्मदीये पूर्वस्मृते ग्रन्थे (पृ. ४५८-४६०) अतिसंक्षेपेण प्रदत्तः। हालैण्डदेशीयेन प्रथितेन विदुषा डॉ. जे. गोण्डामहोदयेन स्वकीये "मिडीवल रिलीजियस लिटरेचर इन संस्कृत" (पृ. १४०-१५२) इत्याख्ये ग्रन्थे यद्यपि वैखानसमतस्य परिचयः संक्षेपेणैव समुपस्थापितः, तथापि तत्रत्यासु टिप्पणीषु वैखानसमतमधिकृत्य लिखितानामाधुनिकग्रन्थानां निबन्धानां च परिचयः सम्यक् प्रदत्तः, मतस्यास्य ऐतिहासिकप्रवृत्तिविषये च महत्त्वपूर्णानि प्रमाणानि समुपस्थापितानि। सन्तोषस्यायं विषयो यद् डॉ. चौधरीमहोदयेनास्यागमस्य विविधग्रन्थ-

साहाय्येन साहित्यस्य दर्शनस्य योगस्य प्रतिष्ठापद्धतेश्चर्यायाश्च विस्तृतः परिचयः समुपस्थापितः। वैष्णवागमेषु शैवागमेषु च विद्या-क्रिया-योग-चर्यापादेषु वर्णितानां सर्वेषां विषयाणां समावेशोऽत्र वर्तते विनैव पादविभागमित्यागमान्तरेभ्यः प्राचीनताऽस्य द्योत्यते। अत्र वानप्रस्थानां वैखानसागमानां च परस्परसापेक्षता सप्रमाणं प्रदर्शिता। अस्मदभिप्रायमधिगत्य च विदुषा लेखकेन वैखानसपाञ्चरात्रमतयोस्तौलनिकमनुशीलनमप्यत्र संयोजितमिति धन्यवादार्हः श्रीमान् डॉ. राघवप्रसाद-चौधरीमहोदयः। तिरुपतिस्थं राष्ट्रियसंस्कृतविद्यापीठमधुना मान्यविश्वविद्यालयत्वेन स्वीकृतमधिवसता तेन वैखानसागमानां सम्पादनानुशीलनादिकं सम्यगाचरितमिति तत्रार्जितं ज्ञानमस्मिन् निबन्धे सम्यक् स्फुटीभूतम्। वैखानसागमानवलम्ब्य न केनापि विदुषाऽद्यावधि स्वतन्त्रो ग्रन्थो लिखित इति निबन्धस्यास्य वैशिष्ट्यमनितरसाधारणं वर्तत इति विभावयन्तु नामागमशास्त्रानुशीलनरुचयो विद्वांसः।

पाञ्चरात्रागमानामितिहासदर्शनादिविषये बहु लिखितमास्ते। अस्माभिरपि पूर्वोक्ते ग्रन्थे (पृ. ४४६-४५८) वैखानसागमापेक्षयास्यागमस्य विस्तरो विहितः। डॉ. जे. गोण्डामहोदयेनापि पूर्वोक्ते ग्रन्थे (पृ. ३८-१३८) पाञ्चरात्रपदव्युत्पत्तिप्रामाण्यादिविषये, संहितानां तिथिक्रमविषये, प्रचारप्रसारक्षेत्रविषये च बहु चर्चितम्। अमेरिकादेशीयेन डा. डेनियनस्मिथमहोदयेन च पाञ्चरात्रसाहित्यपरिचायकाः पारिभाषिकपदव्याख्यानपराश्च ग्रन्था रचिताः। तेषु द्वौ ग्रन्थौ बड़ोदानगरस्थितगायकवाड़शोधसंस्थानतः प्रकाशितौ समुपलभ्येते। सर्वेष्वेषु ग्रन्थेष्वन्यत्र च वर्णितान् सर्वान् विषयान् क्रोडीकृत्य श्रीमता डॉ. अशोककुमारकालियामहोदयेन पाञ्चरात्रागमसम्बद्धो निबन्धो ग्रथितः। इतिहासप्रधानोऽयं निबन्धः। अत्र दार्शनिकतत्त्वानामपि संक्षिप्तः परिचयः प्रस्तोतव्य आसीत्, यथा ह्यस्मदीये पूर्वोक्ते ग्रन्थे दृश्यते। पाञ्चरात्रागमानां श्रुतिमूलकता, पाञ्चरात्रपदव्युत्पत्तिरित्यादयो विषया अनपेक्षितविस्तरेणात्र विवृता आसन्। निबन्धकलेवरवृद्धिर्मा भूदिति सम्पादकमाध्यमेनैतादृशा अंशाः सर्वेष्वपि निबन्धेषु संक्षिप्य स्थापिताः।

अत्रत्याः काश्चन संहिता ज्ञान-योग-क्रिया-चर्याख्येषु चतुर्षु पादेषु विभक्ताः सन्ति, यथा हि सिद्धान्तशैवागमेषु दृश्यते। त्रिरत्ननाम्ना प्रथितासु सात्वत-पौष्कर-जयाख्यासु संहितासु विनैव पादविभागं त इमे सर्वे विषयाः प्रतिपादिता दृश्यन्ते। एकायननाम्ना प्राचीने साहित्ये पाञ्चरात्रागमस्यैवोल्लेखो विद्यते। अयमेव भागवतधर्मनाम्ना सात्वतधर्मनाम्ना च तत्र तत्र वैदिकवाङ्मयेऽपि समुल्लिख्यते। तदेतस्य भागवतधर्मस्य कांश्चन सिद्धान्तान् आद्यः शङ्कराचार्यः स्वकीये तर्कपादभाष्ये वेदविरुद्धान् साधयति, यामुनाचार्य-रामानुजाचार्यादयो वैष्णवाचार्याश्च तत्रत्याः सर्वे सिद्धान्ता वेदाविरोधिन इति ख्यापयन्ति। वस्तुतस्तु— "सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा। स्वयंप्रमाणान्येतानि" इति महाभारते शान्तिपर्वणि नारायणीयोपाख्याने सर्वेषामेषां समानं प्रामाण्यमङ्गीकृतम्, धर्मशास्त्रनिबन्धकारैश्च कैश्चन तत् तथैव सप्रमाणं स्थापितमित्ययमेव पन्थाः श्रेयान्। नारायणीयोपाख्याने वर्णितं पाञ्चरात्रदर्शनं डॉ. आर.जी. भण्डारकरमहोदयेन, अहिर्बुध्न्यसंहिता-जयाख्यसंहितादिषु वर्णितं पाञ्चरात्रदर्शनं

डॉ. ओटो श्रॉडर-डॉ. एस. एन. दासगुप्त - पण्डित ए. कृष्णमाचार्य - डा. जे. गोण्डा-डॉ. राघवप्रसादचौधरीप्रभृतिभिरस्माभिश्च पूर्वोक्ते ग्रन्थे संक्षेपविस्तराभ्यां प्रस्तुतम्। साम्प्रतमपि तमिलनाडुप्रदेशे श्रीरङ्गम्प्रभृतिषु देवस्थानेषु पाञ्चरात्रपद्धत्यैव देवाराधनं भवतीति तु विभावनीयम्।

अत्र श्रीमता पण्डितव्रजवल्लभद्विवेदिना सम्पादितायाः सात्वतसंहिताया उपोद्घातोऽपि विशेषतोऽवधानार्हो विद्यते, यत्र साम्प्रतिकानां केषाञ्चन विदुषां स्खलितानि परिष्कृतानि। "तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः" (१.३.८) इति भागवतपद्ये सूचितं कर्मणामपि मोक्षसाधनत्वं तत्र सप्रमाणं साधितम्। निवृत्तिपरायणाः प्रवृत्तिपरायणाश्च मुनयः श्रूयन्ते। तत्र पाशुपता निवृत्तिपरायणाः, पाञ्चरात्रविदश्च प्रवृत्तिपरायणा इति तत्र तत्र प्रतिपाद्यते। हयशीर्षपञ्चरात्रे पञ्चविंशतिपाञ्चरात्रसंहितानां नामान्युल्लिख्य ततः परं भागवतसंहितानामानि सूचितानि। एतच्च "अमी भागवतानां तु" (१.२.६) इत्येवं तत्र स्पष्टं निर्दिश्यते। एतत्सर्वमुपेक्ष्य केचन सर्वा एताः पाञ्चरात्रसंहिता इति वदन्ति। एवमेव—"पौष्कराख्ये च वाराहे प्राजापत्ये महामते" (६.१३३) इत्यत्र सात्वतसंहितायां त्रिविधः सर्गो वर्ण्यते, किन्तु संहितानामान्येतानि केचन वर्णयन्ति, गतानुगतिकन्यायेन तत्परवर्तिनोऽपि तथैवानुकुर्वन्ति।

शैवागमसम्बन्धिनः पञ्च निबन्धा अत्र समावेशिताः सन्ति। तत्र पाशुपत-वीरशैव-काश्मीरशैवमतसम्बद्धास्त्रयो निबन्धाः सन्ति, द्वौ च निबन्धौ शैवसिद्धान्तसम्बद्धौ स्तः। तत्रैकः काश्मीरमध्यदेशादिष्वपि लब्धप्रसरं द्वैतवादिनं सिद्धान्तशैवागमं वर्णयति, अपरश्च दक्षिणे भारते शिवज्ञानबोधसंज्ञकं ग्रन्थमवलम्ब्य प्रसृतमन्ततोऽद्वैतमतप्रविष्टं सिद्धान्तशैवदर्शनम्।

तत्र पाशुपतं मतं (शैवमतं) मोहेंजोदड़ो-हड़प्पास्थानयोः समुपलब्धेष्वैतिहासिकावशेषेषु मुद्रादिषु च समुपलभ्यत इत्याधुनिका इतिहासविद उत्खननशास्त्रनिष्णाता मन्वते। कृष्णयजुर्वेदस्य तैत्तिरीयसंहितायां मैत्रायणीसंहितायां तैत्तिरीयारण्यके शुक्लयजुर्वेदमाध्यन्दिनसंहितायाः शतरुद्रियाख्ये षोडशतमाध्याये च पञ्चब्रह्ममयस्य पञ्चमन्त्रतनोः शिवस्य वर्णनं समुपलभ्यते, श्वेताश्वतरोपनिषदादिषु च पतिपशुपाशसंबन्धिनो दार्शनिकाः सिद्धान्ता वर्ण्यन्ते। नैकेषु ग्रन्थेषु सिद्धान्त-पाशुपत-कालामुख-कापालिकाश्चत्वारः शैवभेदाः समुपवर्ण्यन्ते। तदत्र शैवसिद्धान्तसंबद्धं लेखद्वयमुपरि चर्चितमेव। पाशुपत-कालामुख-कापालिकसम्प्रदायानाधृत्यास्येतिहासस्य तन्त्रागमखण्डस्य सम्पादकेन श्रीमता पण्डितव्रजवल्लभद्विवेदिना सपरिश्रमं शोभनो निबन्धोऽत्र समावेशितः। अत्र हि श्रीकण्ठप्रवर्तितं प्राचीनं पाशुपतमतम्, लकुलीशप्रवर्तितं च लकुलीशपाशुपतमिति द्विप्रवाहमिदं शास्त्रं तन्त्रालोककारेण श्रीमताऽभिनवगुप्तेन सूचितं सम्यग् वर्णितं विस्तरेण, तदनु च कालामुख-कापालिकमते यथोपलब्धप्रमाणान्येकीकृत्य परिचायिते। सर्वेषामेषां मतानां विशेषतो द्विप्रवाहस्य पाशुपतमतस्य परिचयः प्राचीनानामर्वाचीनानां च ग्रन्थानामाधारेण समुपस्थापित इति धन्यवादार्हो लेखकः। कालामुख-कापालिकसम्प्रदायाववलम्ब्य डॉ. एन. लोरेंजनमहोदयेन महता श्रमेण "कालामुख्स एण्ड कापालिक्स" शीर्षको ग्रन्थो लिखितः, किन्तु पाशुपतमतमवलम्ब्य न कोऽपि ग्रन्थोऽद्यावधि केनचित् प्राच्येन पाश्चात्त्येन वा विदुषा निबद्ध इति सावहितं पठनीयः समालोचनीयश्चायं निबन्ध इत्यागमशास्त्रनिष्णाता विद्वांसः प्रेर्यन्ते।

सिद्धान्तशैवमतमवलम्ब्य निबन्धद्वयमत्र वर्तते। तत्र प्रथमे निबन्धे श्रीमान् डॉ. शीतलाप्रसाद उपाध्यायोऽष्टाविंशतिशैवागमान् सिद्धान्तपदवाच्यान् तदुपागमांश्च द्विशताधिकानाधृत्य प्रथमतः, तदनु च काश्मीरेषु मध्यदेशादिषु च विततं वाङ्मयं परिचायितवान्। मध्यदेशीयानां नामान्ते शिवशम्भुपदाभ्यामलङ्कृतानां शैवाचार्याणां परिचयोऽत्र प्रदत्तो विशेषतोऽवधानार्हः। एतेन सिद्धान्तशैवदर्शनं दक्षिणभारतीयं दर्शनमित्याधुनिकानां विदुषां प्रवादो निष्प्रमाणक इति सुतरां सिद्ध्यति। प्रवादस्यास्य केनापि मूलेन भाव्यमिति भवति स्वाभाविकी जिज्ञासा। प्रवादेनापि नहि सर्वथा निर्मूलेन स्थातव्यमित्यैतिह्यप्रमाणवादिनो मन्यन्ते। तदेषा जिज्ञासा डॉ. रमाघोषनिबद्धेन निबन्धेन द्वितीयेन सिद्धान्तशैवसंबद्धेन समाधीयते। अत्र हि प्रथमतो मेयकण्डशास्त्रपूर्ववर्तिनस्तमिलवाङ्मयस्य, यत्र हि विशेषतो द्वादशग्रन्थानां समावेशो भवति, तदनु च मेयकण्डदेवकृतशिवज्ञानबोधग्रन्थस्य, तदाधारेण विकसितस्य शैवसिद्धान्तवाङ्मयस्य, यत्र हि प्राधान्येन चतुर्दशग्रन्थानां गणना विधीयते, तत्प्रतिपाद्यदर्शनस्य, उपासनापद्धतेश्च सम्यक् परिचयः प्रस्तुतो विद्यते। कालक्रमेण सिद्धान्ताचार्या एतेऽद्वैतवादप्रवणा बभूवुरित्येतस्य सिद्धान्तशैवदर्शनस्य दक्षिणभारतीयत्वे न कोऽपि विवादः प्रसरेत्।

सिद्धा-मालिनी-नामक(वामक = वामकेश्वरीमत)नामधेयान् त्रीनागमग्रन्थान्, शिवसूत्रं स्पन्दशास्त्रं प्रत्यभिज्ञाकारिकां चावलम्ब्य काश्मीरेषु प्रसृतिं गतं शास्त्रं काश्मीरशैवदर्शनं प्रत्यभिज्ञादर्शनं वेति नाम्ना प्रथितमभूत्। स्वप्ने शिवादेशमवाप्य आचार्यो वसुगुप्तः शिवसूत्राण्युद्दधार। स्पन्दकारिकाकर्तृविषये द्वे मते प्रचलिते स्तः—वसुगुप्तः स्पन्दकारिकाकर्तेत्येकम्, तच्छिष्यः कल्लटः स्पन्दकारिकां संदृब्धवानित्यपरम्। क्षेमराजादयः प्रथमम्, भास्करादयश्च द्वितीयं मतमनुसरन्ति। प्रथमे शिवपारम्यवादिनः, अपरे च शक्तिपारम्यवादिनः। शक्तिपारम्यवादिषु प्रद्युम्नः कल्लटस्य प्रधानः शिष्यः। प्रत्यभिज्ञाकारिकाकर्ता शिवदृष्टिवृत्तौ तस्य सिद्धान्तं समालोचयति। अधुना शिवसूत्रं खण्डत्रयात्मकमेवोपलभ्यते। पूर्वमेतत् खण्डचतुष्टयात्मकमासीत्। प्रथमेषु खण्डत्रयेषु कल्लटेन मधुवाहिनीनाम्नी, चतुर्थे च खण्डे तत्त्वार्थचिन्तामणिनाम्नी व्याख्या न्यबध्नत। शिवसूत्रस्य खण्डत्रयमेवाधुना समुपलभ्यते। तस्य चतुर्थः खण्डः, कल्लटकृतित्वेन चर्चितं व्याख्यानद्वयं च साम्प्रतं नोपलभ्यते। शक्तिपारम्यवादिनः स्पन्दकारिकां तत्कर्तारं कल्लटं च क्रमदर्शनस्याद्यमाचार्यं मन्वते। परम्परा सा नामशेषतां गता, अथवा क्रमदर्शनरूपेण तस्याः पृथग् विकासः संजातः।

प्रस्तुतेऽस्मिन् निबन्धे शिवपारम्यवादिनं पक्षमाश्रित्य सर्वेषामुपर्युक्तानामन्येषां चागमानाम्, शिवसूत्र-स्पन्दकारिका-प्रत्यभिज्ञाकारिकाणामाधारेण विकसितं सोमानन्द-उत्पलदेव-अभिनवगुप्तप्रभृतिभिर्महनीयैराचार्यैर्विवृतं प्रत्यभिज्ञादर्शनं सेतिहासमत्र प्रामाणिक्या पद्धत्या प्रस्तुतम्। परात्रीशिकाशास्त्रमप्यत्रैवान्तर्भाव्यते। 'परात्रिंशिका' इति नाम्नो भ्रममूलकताऽत्र निबन्धकारेण प्रस्थाप्यते। शास्त्रमिदं कौलदर्शनं प्रतिपादयति। अत एवाभिनवगुप्तेन स्कीये तन्त्रालोके उपायचतुष्टयप्रतिपादनावसरे आणवोपायत्वेन द्वैतदृष्टीनामागमानाम्, शाक्तोपायत्वेन क्रमदर्शनस्य, शाम्भवोपायत्वेन कुलदर्शनस्य, अनुपायपद्धत्या च तन्त्रान्तरेषु सहजशब्देन

व्याकृतस्य प्रत्यभिज्ञादर्शनस्य व्याख्यानमक्रियत। सर्वमेतन्निबन्धकारेणात्र संगृहीतम्। अपि च, नानाशाखोपशाखभिन्नस्य सम्पूर्णस्यास्य वाङ्मयस्य तत्प्रतिपादितदर्शनस्य चापि सम्यक् परिचयोऽस्मिन् निबन्धे प्रदत्तः। मन्त्रोद्धारपद्धतिविषयको विचारो विशेषतोऽवधानार्होऽत्रत्यः।

इष्टलिङ्गधारणम्, शवस्याग्निसंस्कारापेक्षया भूमिसंस्कारः, वर्णाश्रमधर्माङ्गीकृतशैवाचारपालने शैथिल्यम्, पुराणादिष्वेषां कृते 'अत्याश्रमी' इति पदप्रयोग इतीदृशानां लक्षणानां दर्शनेन वीरशैवधर्मस्य सम्बन्धः प्राक्कालिकशैवधर्मेण सह सुतरां सिद्ध्यति, किन्तु कलचुरिनरेशस्य विज्जलस्य मन्त्रिणा बसवनामधेयेन १२ शताब्दीभवेन सोऽयं धर्मः कर्णाटकराज्ये प्रसारित इत्याद्यो धर्मप्रचारकः स इति साधयन्त्याधुनिका इतिहासविदः, तन्न साध्विति च वदन्ति तन्मतानुयायिन आचार्याः। सिद्धान्तशिखामणिग्रन्थोऽष्टमनवमशताब्द्यां रेणुकागस्त्यसंवादरूपेण प्रादुर्भूत इति सप्रमाणं ते साधयन्ति। तत्र च कामिकाद्यष्टाविंशत्यागमानां सिद्धान्तपदवाच्यानामुत्तरे भागे वीरशैवमतं सविशेषं प्रतिपाद्यत इति स्पष्टमेवोच्यते। अत्र शिवशक्तिपर्यायतया प्रकाशविमर्शशब्दौ प्रयुक्तौ। तस्मिन् काले कर्णाटकराज्ये जैनधर्मस्य कालामुखसम्प्रदायस्य च प्रभावातिशयो ज्ञायते। अतः प्रत्यभिज्ञादर्शनमनु सहैव वाऽस्य मतस्य प्रवृत्तिबीजान्यन्वेषणीयानि। भारतस्य प्रत्येकं प्रदेशेषु नानाशाखोपशाखाभिन्नानां संस्कृतभाषानिबद्धानां ग्रन्थानामाधारेणैव तासु तासु भाषासु सन्तवाण्यः प्रसृतिं लेभिरे। एवं च कन्नड़भाषायां वीरशैवधर्मदर्शनयोरुपदेशको बसवो नाद्यः प्रतिष्ठापकः। प्रत्युत पूर्वतः प्रवृत्तमेनं धर्मं कन्नडभाषामाध्यमेन लोके प्रचारयामासेत्येव मन्तव्यम्।

अस्य धर्मस्य प्रतिष्ठापका लोके प्रचारकाश्च पञ्चाचार्याः श्रूयन्ते। काशी-केदारप्रभृतिषु भारतस्य पञ्चसु स्थानेषु तैर्ज्ञानसिंहासनादीनि पञ्च पीठानि स्थापितानि। सम्पूर्णाया अस्याः परम्परायाः संक्षेपविस्तराभ्यामत्र परिचयो निबन्धकारेण प्रदत्तः। वीरशैव-लिङ्गायतप्रभृतिशब्दानां व्युत्पत्तयः सुस्पष्टं स्फोरिताः। सम्पूर्णस्य साहित्यस्य प्राचीनस्यार्वाचीनस्य संस्कृतभाषानिबद्धस्य परिचयः सम्यक् प्रदत्तः। निबन्धेऽस्मिन् पूर्वार्धे धर्मस्य, उत्तरार्धे च वीरशैवदर्शनस्य शक्तिविशिष्टाद्वैतसिद्धान्तप्रतिपादकस्य प्रतिपादनं वर्तते। द्वैतवादिनीनामद्वैतवादिनीनां च श्रुतीनां समन्वयः सार्वात्म्येनास्मिन् दर्शन एव भवितुमर्हतीति साधयन्ति वीरशैवमतनिष्ठा दार्शनिकाः, संसारावस्थायां द्वैतदृष्टेर्मुक्तावस्थायां चाद्वैतदृष्टेरबाधप्रसराङ्गीकारात्। द्वैताद्वैतमताङ्गी-कर्तृभास्कराचार्यवद् वीरशैवदर्शनेऽपि ज्ञानकर्मसमुच्चयवादोऽङ्गीक्रियते। सोऽयं सिद्धान्तो निबन्धकारेणात्र संक्षेपेण समुपस्थापितः। अस्य विस्तरस्तु तदीये "सिद्धान्तशिखामणिसमीक्षा" इत्याख्ये ग्रन्थे द्रष्टव्यः।

अत्रत्येषु शैवागमसंबद्धेषु पञ्च निबन्धेषु यत् प्रतिपादितम्, तत्सर्वमस्मदीये पूर्वोक्ते ग्रन्थेऽपि (पृ. ४६५-५०८) विवृतं वर्तते। तत्र रसेश्वरदर्शनस्य, व्याकरणदर्शनस्य च संक्षेपेण परिचयः प्रदत्तः (पृ. ४८२-४८५)। रसशास्त्रेण व्याकरणविद्यया च तयोः संबन्ध इति तन्त्रागमखण्डेऽस्मिन् न तौ समावेशितौ।

पूर्वोक्तेषु वैष्णवेषु शैवेषु चागमतन्त्रेषु शक्तिसहितस्य स्वेष्टदेवस्य भक्तिः प्राधान्येन प्रतिपाद्यते। शाक्ततन्त्रेषु च शक्तेरेव प्राधान्यम्। तच्च "शक्त्या विना शिवे सूक्ष्मे नाम धाम

न विद्यते", "शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्" इत्यादिना प्रतिपाद्यते। क्रमकुलमतत्रिकदर्शनानां समाहारभूते काश्मीरशैवदर्शने शक्तिपारम्यवादिनः सन्तीत्यधुनैवावोचाम। तत्र कुलागमानां वक्ता शिवः, श्रोत्री च भगवती नानानामधेया शक्तिः, एतद्विपरीतं च क्रमागमानामुपदेष्ट्री शक्तिः, शिवश्च श्रोतृरूपेण तत्रोपतिष्ठते। आगमनिगमपदवाच्यावेताविति केचन वाराहीतन्त्रप्रामाण्येन साधयन्ति। प्राचीनासु तन्त्रनामावलीषु न दृश्यते तन्त्रमेतत्। अभिनवगुप्तप्रभृतिभिश्च प्राचीनैराचार्यैर्निगमागमशब्दौ वेदतन्त्रवाङ्मयपर्यायावभ्युपगम्येते, प्राचीने वाङ्मये चागमपदेनोभौ क्रमकुलमतौ सूचितौ। तेन पराक्कालिके एते निगमागमसंज्ञे इति मन्तव्यम्। कलिकातातः प्रकाशिते कुलचूडामणिनिगमे क्षेमराजेन कुलचूडामणिवचनत्वेन स्मृताः श्लोका नोपलभ्यन्ते। एवमेव कुलार्णव-तन्त्रराजतन्त्रविषयेऽपि मन्तव्यम्, तन्त्रालोकतद्विवेकादिषु स्मृतानां श्लोकानां तत्राभावात्। भवतु नाम।

शाक्ततन्त्रसंबद्ध एक एव निबन्धोऽत्र वर्तते, यत्र हि क्रमकुलागमयोः साहित्यस्य विस्तरेण तत्प्रतिपादितानां दर्शनोपासनाविषयकसिद्धान्तानां च संक्षेपेण परिचयो वर्तते। स्मार्ततन्त्रसंबद्धे निबन्धेऽपि दशमहाविद्याविषयको विस्तरः शाक्ततन्त्रसंबद्ध एव मन्तव्यः। डॉ. कान्तिचन्द्रपाण्डेयमहोदयेन स्वीये पूर्वोक्ते ग्रन्थे प्रत्यभिज्ञादर्शनस्य सर्वासां शाखानां कुल-क्रममतयोश्च विस्तरेण, शैवदर्शनबिन्दौ च संक्षेपेण परिचयः प्रदत्तः। अस्माभिश्च पूर्वोक्ते ग्रन्थे मतावेतावपि विवृतौ (पृ. ५०८-५२७)। निबन्धलेखकस्य क्रममतसंबद्धो ग्रन्थः पूर्वं सूचित एव। कुलकौलशास्त्राणामाद्यः प्रवर्तको मत्स्येन्द्रनाथ इति नानाप्रमाणेभ्यः सिद्ध्यति। अयमेव बौद्धसिद्धेषु चतुरशीतिसंख्याकेष्वाद्यो मीननाथ इति डॉ. प्रबोधचन्द्रबागचीमहोदयः "कौलज्ञाननिर्णयः" इति ग्रन्थस्य प्रस्तावनायां स्थापयति। नवनाथेष्वपि श्रूयते तदेतन्नाम। अयं च पञ्चमषष्ठशताब्दीभव इति डॉ. कान्तिचन्द्रपाण्डेयः सप्रमाणं साधयति। एवमेव वातूलनाथ-निष्क्रियानन्दनाथादयः क्रमदर्शनस्य प्रवक्तार इति सर्वेषामेषां परिचयः कुलक्रमसंबद्धे निबन्धेऽस्मिन् डॉ. नवजीवनरस्तोगिना नातिविस्तरेण प्रदत्त इति विभावनीयम्।

अस्माभिः, श्रीमता डॉ. कान्तिचन्द्रपाण्डेयेन च पूर्वोक्तयोर्ग्रन्थयोर्नित्याषोडशिकार्णवप्रभृतीनां त्रिपुरातन्त्राणां भास्कररायप्रभृतिग्रन्थकाराणां च परिचयः कौलसम्प्रदायप्रसङ्गे प्रदत्तः। भगवती त्रिपुरा दशमहाविद्यासु प्रथिततमा। सकलं निष्कलं चेति द्विविधमुपासनं ताराप्रभृतिमहाविद्यानां शक्तिसङ्गमतन्त्रादिषु वर्णितम्। तच्च समयिमतं कौलमतं चेति नाम्नाऽपि प्रसिद्धम्। शाङ्करेषु मठेषु समयिमतपद्धत्यैव भगवत्यास्त्रिपुराया उपासना विधीयते। शङ्कराचार्यकृतित्वेन प्रसिद्धे प्रपञ्चसारे त्रिपुरामहाविद्यासमर्चना सर्वप्रथमं प्रदर्श्यते। एवमेव शारदातिलकेऽपि प्रपञ्चसारवत् पञ्चायतनपूजाविधानं वर्तते। एतौ च ग्रन्थौ स्मार्ततन्त्रत्वेन प्रसिद्धौ। स्मार्ततन्त्राणामपीदृशानां वर्तते महती परम्परा। महाकालसंहिता-शक्तिसंगमतन्त्र-ईशानशिवगुरुदेवपद्धतिसदृशेषु ग्रन्थेषु सा सविशेषं प्रतिपादिता। तदेतेषां स्मार्ततन्त्राणां दशमहाविद्यासमुपासाविधायकानां च ग्रन्थानां सम्यक् परिचयो डॉ. किशोरनाथझानिबद्धे निबन्धे द्रष्टव्यः। स्मार्ततन्त्राणां प्रवृत्तिः कथं कदा कुत्र समजायतेत्यपि तत्र सप्रमाणमुपपादितम्। दशमहाविद्याविषये बहवः पक्षा निबन्धकारेण

समुपस्थापिताः, विवेचिताश्च ते। अत्र निबन्धकारस्य प्रधानमवलम्बनं यद्यपि महाकालसंहितैव विद्यते, तथापि दशमहाविद्यासंबद्धानामन्येषां च ग्रन्थानां यथायथमुपयोगः, तेषां परिचयः, तत्प्रतिपादितविषयाणां संग्रहश्च सपरिश्रमं कृतः। अस्य निबन्धस्यार्धभागः शाक्ततन्त्रैरन्यश्च स्मार्ततन्त्रैः संबद्ध इति शाक्ततन्त्रसंबद्धनिबन्धानन्तरमयं स्थाप्यते।

बौद्धमतानुसारं भगवता बुद्धेन श्रावकयानस्य, महायानस्य, मन्त्रयानस्य च देशना कृता। ऐतिहासिका मन्त्रयानमपि त्रिधा विभजन्ति—वज्रयानं कालचक्रयानं सहजयानं चेति। विभागत्रयमेतत् तन्त्रागमशास्त्रनिष्णाताः, वर्तमाने काले सुदृढैः प्रमाणैः शास्त्रस्यास्य प्रचारकाः प्रसारकाश्च श्रीमन्तः पण्डितगोपीनाथकविराजमहोदयास्तथैव मन्यन्ते, व्याकृतवन्तश्च आचार्य-नरेन्द्रदेवकृतस्य "बौद्ध धर्म-दर्शन" इत्याख्यस्य ग्रन्थस्य भूमिकायाम्। तत्र वज्रयानं कौलिकप्रक्रियायाः कापालिकप्रक्रियायाश्च, कालचक्रयानं प्राणापानप्रक्रियायाः, सहजयानं च सिद्धानां दर्शनस्य प्रातिनिध्यमाचरन्ति। अन्येष्वपि कौलिकदर्शनेषु सर्वमेतद् द्रष्टुं शक्यते। त्रिभेदभिन्नानां बौद्धतन्त्राणां परिचायकेऽत्रत्ये निबन्धेऽपि सर्वमेतद् द्रष्टुं शक्यते।

शैववैष्णवागमेषु विद्या(ज्ञान)-क्रिया-योग-चर्याख्याश्चत्वारः पादाः सन्तीति पूर्वमुक्तम्। मन्त्रयाने तु क्रिया-चर्या-योग-अनुत्तरभेदेन भिन्नानि नाना तन्त्राणि विराजन्ते। मन्त्रनयस्य तात्त्विकविकासक्रमः, प्राचीना आचार्याः, चीन-जापान-तिब्बत-प्रभृतिदेशेषु बौद्धतन्त्राणां प्रचारः, विशिष्टा मौलिकास्तन्त्रग्रन्थाः, बौद्धतन्त्राणां प्रतिपाद्या मुख्या विषयाः, षडङ्गयोगः, अभिषेकः, मुद्रा-मण्डल-कुलादिविचारः, पीठोपपीठवर्णनमित्याद्या नैके विषया यथाशास्त्रमत्र वर्णिताः। कुण्डलिनीयोगो हेवज्रादितन्त्रेषु चाण्डालीयोगनाम्ना व्याक्रियते। तत्प्रसङ्गे नाडी-चक्र-वायु-तिलकादीनां व्याख्यानं शाक्ततन्त्रवर्णितैरेषां स्वरूपैः साम्यं वैषम्यं च बिभर्तीति विभावनीयं विद्वद्भिः। पीठोपीठादीनामान्तरबाह्यस्वरूपविषयेऽपि तथैव वक्तुं शक्यते। सर्वान् बौद्धतन्त्रवर्णितान् प्रधानान् एतान् विषयान् संक्षेपपद्धत्या निर्दिष्टसीमनि वर्णयन् निबन्धकारो नूनमतीव साधुवादार्हः।

जैनसम्प्रदाये तन्त्राणां प्रवृत्तिर्नास्तीति तत्सम्प्रदायनिष्णाता बहवो विद्वांसो मन्वते। पद्मावतीकल्पप्रभृतिग्रन्थानां प्रकाशनमनु श्वेताम्बरजैनसम्प्रदाये सा प्रवृत्तिः शिथिलीभूता, अथापि दिगम्बराणां सैव धारणाऽद्यापि सुस्थिरा वर्तते, यद्यपि सौन्दर्यलहरीटीकाकर्तुः कार्णाटकीयस्य लक्ष्मीधरस्य, यत्र हि कदाचन जैनसम्प्रदायस्य महान् प्रचार आसीत्, वचनमिदं समुपलभ्यते —"दिगम्बरक्षपणकादयस्तु....." (तवाधारे ४१ श्लोकव्याख्यायाम्) इति। नात्र सम्पूर्णं वचनं दीयत इति जिज्ञासुभिस्तत्रैव द्रष्टव्यम्। विषयस्यास्य एक एव विद्वानस्माकं परिचित आसीत्। सोऽपि नासीज्जैनः। विषयेऽस्मिन् निबन्धं सज्जीकर्तुं स एवास्माभिः प्रार्थितः। तेन च जैनतन्त्रविषये साहित्यसम्पद्विषये च शोभनोऽयं निबन्धः सज्जीकृत्य प्रेषित इत्यत्रावदधतु नाम विद्वांसः।

दिगम्बर-श्वेताम्बर-स्थानकवासिभेदेन विभक्तस्त्रिविधो जैनसम्प्रदायः साम्प्रतं प्रवर्तत इति प्रदर्श्य निबन्धलेखकेन जैनतन्त्राणामुद्भवस्य विकासस्य चेतिहासः सम्यक् प्रदर्शितः। देवतानां देवीनां मन्त्राणां च स्वरूपं संवर्ण्य तेन जिननमस्कारात्मकमन्त्रसाहित्यस्य, विविधयन्त्राणां

स्वरूपस्य, तन्त्रविद्या-योग-शिल्पकलादिसंबद्धस्य साहित्यस्य, जैनस्तुतिसाहित्यस्य, जैनपरम्परासु प्रचलितानां विविधानामनुष्ठानानाम्, अनुष्ठानसाहित्यस्य, तान्त्रिकाध्यात्मदर्शनसाहित्यस्य च सुविशदं विवरणमुपस्थापितम्। तेन जैनसम्प्रदाये तन्त्राणां प्रवृत्तिर्नास्तीति केषाञ्चन जैनविदुषामाग्रहो नैव याथार्थ्यं भजत इति सम्यग् निबन्धस्यास्य पठनेन सिद्ध्यति। वस्तुतस्तु तन्त्रपदस्य विकृतां परिभाषामालक्ष्य तेन भीतभीता इव जैनाचार्या निषेधमुखेन तत्र प्रवर्तन्ते। वीरशैवमतवज्जैनमतमपि प्राधान्येन तन्त्रागमानां सौम्यस्वरूपस्य प्रातिनिध्यमाचरतीति तु निष्कृष्टः पन्थाः।

अन्तिमोऽत्र निबन्धो वर्तते पुराणगतयोगतन्त्रविषयकः। पुराणानि भारतीयज्ञानस्य विश्वकोशस्थानीयानीति जानीमो वयम्। अग्निपुराण-गरुडपुराण-नारदीयपुराणानि तत्र निदर्शनतयोपस्थापयितुं शक्यन्ते। आगमानि ज्ञान-क्रिया-योग-चर्या-प्रतिपादकानीति सूचितमेव। सर्वमेतत् पुराणेष्वपि संवर्ण्यते। कानिचन पुराणान्यपि चतुष्पादानि सन्ति। विस्तरो मा भूदिति धिया पुराणगतयोगतन्त्रयोरेव स्वरूपं संक्षेपेणात्र समावेशितम्, एतद्विषयकश्च निबन्धः "कूर्मपुराण : धर्म और दर्शन" इत्याख्यस्य ग्रन्थस्य लेखिकया डॉ. करुणा एस. त्रिवेदिमहोदयया लिखितः। तया हि सर्वप्रथमं सिद्धान्तस्यास्य स्थापना कृता यत् पुराणानां वेदार्थोपबृंहकत्ववद् आगमतन्त्रोपबृंहकत्वमप्यङ्गीकर्तव्यमिति। तदेतस्य सिद्धान्तस्य सुदृढीकरणाय तया कृतान्तपञ्चकप्रामाण्यपक्षोऽङ्गीकृतः, यत्र न केवलं वेदोपनिषदाम्, किन्तु सांख्य-योग-पाञ्चरात्र-पाशुपतमतानामपि समानमानं प्रामाण्यमुद्घोष्यते। आगमतन्त्रशास्त्रस्य परिधिं सम्यगुपवर्ण्य स्वरूपं च वैशद्येन स्फुटीकृत्य तया पुराणेषु महाभारते धर्मशास्त्रनिबन्धेषु च कृतान्तपञ्चकस्य प्रामाण्याङ्गीकारपक्षः स्फुटीकृतः, तत्प्रमाण्याप्रामाण्यप्रतिपादकानां वचनानां सामञ्जस्यं च स्थापितम्।

निबन्धस्य योगखण्डे पुराणवर्णितानि योगलक्षणानि संवर्ण्य योगभेदान्, योगाङ्गानि च परिगणय्य तेषां स्वरूपं साधु समुन्मीलितम्। पाशुपतो योगो मन्त्रयोगश्चात्र वैशद्येन विवृतः। आगमशास्त्रेषु जपस्यापि योगाङ्गता प्रतिपाद्यते। साऽत्र सम्यक् प्रदर्शिता। देशकालविचारो योगसाधनाय नितान्तमपेक्षितः। तन्त्रशास्त्रेष्वपि प्रवर्ततेऽत्र महान् विस्तरः। सोऽयं विषयोऽप्यत्र चर्चितः। नानापुराणेष्वष्टाविंशतिसंख्याका योगाचार्याः, तेषां प्रत्येकं चत्वारः शिष्याश्चेति चत्वारिंशदधिकैकशतयोगाचार्याणां नामावली सम्यगत्र परीक्षिता। सहैवात्र ज्ञानकर्मसमुच्चयवादः, भक्ति(प्रपत्ति)योगः, कूर्मपुराणगतेश्वरगीताप्रतिपादितानां पति-पशु-पाशाख्यानां तत्त्वानां विवेचनमित्यादयो विषया अपि वैशद्येन वर्णिताः।

एवमेव तन्त्रखण्डे सप्तदशपुराणानि समवलम्ब्य तत्र तन्त्रागमसंबद्धानां विषयाणां समाहारः कुत्र कुत्र केन केन रूपेण वर्तत इति सम्यक् प्रदर्शितम्। अत्र निबन्धान्ते शाक्तपीठसंबद्धा विचारसरणिरपि समालोचिताऽऽस्ते। तन्त्रागमेषु चत्वारि, अष्टौ, चतुर्विंशतिः, द्वात्रिंशत्, एकपञ्चाशत्, चतुष्षष्टिश्च पीठानि समुपवर्ण्यन्ते। पुराणेषु तु तेषां संख्या १०८ वर्तत इति मत्स्यपुराण-देवीभागवतयोः प्रामाण्येन नामावली प्रस्तुताऽत्र। डॉ. डी. सी. सरकारविरचिते "दी शाक्त पीठाज्" इति नामधेये ग्रन्थे एकपञ्चाशत्पीठान्यष्टोत्तरशतपीठानि

च वैशद्येन वर्णितानि, विशेषजिज्ञासुभिस्तत एव द्रष्टव्यानि। पीठनामावलीप्रसङ्गेनाग्नि-पुराणवर्णितचतुषष्टियोगिनीनामान्यप्यत्र सूचितानि। अन्ते च पुनरपि पुराणानां तन्त्रागमोपबृंहकत्वं संसाध्य कृतान्तपञ्चकप्रामाण्यं च सुस्थिरीकृत्य निबन्धोऽयमुपसंहृत इति साधुवादार्हा निबन्धस्यास्य लेखिका।

अस्य तन्त्रागमखण्डस्य सम्पादने ममान्तेवासी डॉ. रमाकान्तझा अपि साहाय्यमकरोदिति सोऽप्याशीर्वादभागिति शम्।।

जन्माष्टमी<br>वि.सं. २०५३

बलदेव-उपाध्यायः<br>विद्या-विलासः<br>रवीन्द्रपुरी, वाराणसी

# पुरोवाक्

भारतीय दार्शनिक विचार-सरणि में तन्त्रागम का, साधना की दृष्टि से विशेष महत्त्व है। तन्त्रागमों के दार्शनिक विचार उतने ही उदात्त हैं जितने षड्दर्शनों के; उनकी साधनापद्धति उतनी ही पावन और उपादेय है जितनी वेदों की। सभी सम्प्रदायों में साधना के दो प्रकार स्वीकृत हैं— बहिरङ्ग और अन्तरङ्ग। बहिरङ्ग साधना में सार्वभौम विधि-विधानों की प्रमुखता होती है। इसका अधिकारी सर्वसाधारण होता है। इसमें अधिकारी की विशेष योग्यता अपेक्षित नहीं होती। अन्तरङ्ग साधना के विधि-विधान में विशिष्ट अधिकारी की अपेक्षा रहती है। इस साधना के लिए सबको अनुमति नहीं है। अधिकारी की योग्यता परख कर ही साधना की स्वीकृति विहित है। साधना के ये दो प्रकार संसार के समग्र धार्मिक सम्प्रदायों में उपलब्ध होते हैं।

भारतीय साधना-पद्धति में प्रथम बहिरङ्ग साधना का द्योतक ग्रन्थ है- निगम अर्थात् वेद। द्वितीय अन्तरङ्ग साधना का बोधक ग्रन्थ है तन्त्रागम। भारतीय जनमानस की धार्मिक तथा सांस्कृतिक आस्था उभयाश्रित है। वह निगम और आगम दोनों का आश्रयण करती है। भारतीय दार्शनिक एवं सांस्कृतिक साधनातत्त्व के यथार्थ बोध के लिए निगमागम का ज्ञान नितान्त अपेक्षित है।

**तन्त्रागम का अर्थ**-'तन्त्र' शब्द की निष्पत्ति तन् धातु से ष्ट्रन् प्रत्यय लगने पर सिद्ध होती है। तन्यते विस्तार्यते ज्ञानमनेन इति तन्त्रम्, अर्थात् तन्त्र वह शास्त्र है जिसके द्वारा ज्ञान का विस्तार किया जाता है। 'कामिक आगम' के अनुसार तन्त्र शब्द की निरुक्ति तन् (विस्तार करना) और त्रै (रक्षा करना) इन दो धातुओं के योग से सिद्ध होती है। इसका आंशय है कि तन्त्र विपुल अर्थों को विस्तार देने के साथ ही तन्त्रसाधकों का त्राण (रक्षा) भी करता है—

**तनोति विपुलानर्थान् तन्त्रमन्त्रसमन्वितान्।**
**त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते।।**

इस प्रकार 'तन्त्र' का व्यापक अर्थ शास्त्र, सिद्धान्त, अनुष्ठान, विज्ञान तथा विज्ञान-विषयक ग्रन्थ आदि है और इस व्यापक अर्थ में इसका प्रयोग मिलता भी है। महाभारत में न्याय, धर्मशास्त्र, योग आदि के लिए तन्त्र शब्द का प्रयोग किया है —

'स्मृतिश्च तन्त्राख्या परमर्षिप्रणीता'। परन्तु लोक व्यवहार में तन्त्र शब्द का संकुचित अर्थ में प्रयोग किया जाता है जिसका अभिप्राय वह शास्त्र है जो मन्त्र, कील, कवच आदि से सम्बद्ध एक विशिष्ट साधनपथ का निर्देश देता है।

तन्त्र का दूसरा प्रसिद्ध नाम आगम है। वाचस्पति मिश्र ने योगभाष्य की अपनी तत्त्ववैशारदी व्याख्या में 'आगम' शब्द की व्युत्पत्ति की है—'आगच्छन्ति बुद्धिमारोहन्ति यस्मादभ्युदयनिःश्रेयसोपायाः स आगमः' अर्थात् जिससे अभ्युदय और निःश्रेयस के उपाय बुद्धि में आते हैं वह 'आगम' कहलाता है। लौकिक समुन्नति और मोक्ष के उपायों का प्रतिपादक शास्त्र आगम है। निगम (वेद) में कर्म, उपासना और ज्ञान के स्वरूप का तथा आगम में साधनभूत उपायों के रूप का दिग्दर्शन कराया जाता है। निगम और आगम दोनों परस्पर उपकारक शास्त्र हैं। यथा, अद्वैतवेदान्त नाना युक्तियों से अद्वैत तत्त्व का प्रतिपादन करता है, शाक्त आगम अद्वैत तत्त्व का साधना-प्रकार बतलाता है। निगम में सिद्धान्तपक्ष का और आगम में व्यवहारपक्ष का प्रामुख्य होता है। तन्त्र या आगम में साधना का उपदेश ही प्रमुख तत्त्व है। इसमें क्रिया तथा अनुष्ठान पर विशेष बल दिया जाता है। वाराही तन्त्र के अनुसार आगम के सात लक्षण हैं— (१) सृष्टि, (२) प्रलय, (३) देवार्चन, (४) सर्वसाधन, (५) पुरश्चरण, (६) षट्कर्म, (७) ध्यानयोग। ये सातों लक्षण आगम के विषयों के संकेतक हैं। निष्कर्षतः वैदिक ग्रन्थों में निर्दिष्ट ज्ञान का क्रियात्मक आचार ही आगमों का मुख्य विषय है।

**तन्त्रागम की वैज्ञानिकता** - वस्तुतः तन्त्रागम आधुनिक विज्ञान से तुलनीय है। यद्यपि विज्ञान का मार्ग सबके लिए प्रशस्त है, किन्तु बिना प्रशिक्षक और प्रयोगशाला के कोई विज्ञान में दक्षता नहीं प्राप्त कर सकता; विज्ञान का समुचित प्रयोग नहीं कर सकता। ठीक यही स्थिति तन्त्रागम की भी है। तन्त्र आध्यात्मिक जगत् का व्यावहारिक विज्ञान है। तन्त्र साधना में भी योग्य गुरु की समुचित शिक्षा के बिना साधक को तन्त्रविद्या का सही ज्ञान नहीं हो सकता। जिस प्रकार आज व्यवहार-जगत् में विज्ञान का युग है, उसी प्रकार आज धार्मिक संसार में तन्त्र का युग है। तन्त्रविद्या में गुरु प्रयोग के द्वारा अधिकारी शिष्य को शास्त्र की सत्यता को प्रमाणित कर उसे तन्त्र की व्यावहारिक शिक्षा देता है। तन्त्रमार्ग सर्वसाधारण के लिए उन्मुक्त होने पर भी अधिकारी की अपेक्षा रखता है। आज व्यवहार में विज्ञान की भाँति अध्यात्म में तन्त्र की नितान्त आवश्यकता है। महानिर्वाण तन्त्र का 'विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये' यह वचन इस तथ्य की पुष्टि करता है।

ऊपर कहा जा चुका है कि तन्त्रों की विशेषता क्रिया है। वैदिक साहित्य में उपदिष्ट ज्ञान का क्रियात्मक रूप आगम शास्त्र का मुख्य विषय है। भारतीय धर्म और संस्कृति निगमागममूलक हैं। आगम शास्त्र के परिशीलन से यह परिलक्षित होता है कि तन्त्र दो प्रकार के हैं— (१) वेदानुकूल तन्त्र, (२) वेदबाह्य तन्त्र। अधिकतर तन्त्रों के सिद्धान्त तथा आचार का उत्स वेद ही है। पाञ्चरात्र तथा शैवागम के कतिपय सिद्धान्त वेदमूलक होकर भी प्राचीन ग्रन्थों में इन्हें वेदबाह्य कहा गया है। शाक्त तन्त्र के सप्तविध आचारों में केवल वामाचार को छोड़कर शेष आचार वेदमूलक ही हैं। वेदबाह्य तन्त्रों में आचार और पूजा-प्रकार वैदिक पद्धति से भिन्न होते हैं।

शाक्त तन्त्र का उद्देश्य जीवात्मा की परमात्मा के साथ तादात्म्यप्राप्ति है। तन्त्रोपासना की प्राथमिक मान्यता है— उपास्यदेव और उपासक में अभेदभाव का स्थापन। 'देवो भूत्वा यजेद् देवम्' के अनुसार शाक्त-साधना में अद्वैतभाव अनुस्यूत रहता है। सच्चे शाक्त में 'मैं ही देवी हूँ, मैं ही ब्रह्म हूँ, मैं स्वभावतः मुक्त सच्चिदानन्द रूप हूँ' यह अद्वैत धारणा विद्यमान रहती है। शाक्तों की दार्शनिक धारणा जीव को अग्निस्फुलिङ्गवत् ब्रह्म से आविर्भूत मानती है। वस्तुतः तन्त्रों के सिद्धान्त उपनिषन्मूलक हैं। तन्त्रों में परमतत्त्व मातृरूप से स्वीकृत है। ऋग्वेद के वागाम्भृणीसूक्त (१०.१२५) में प्रतिपादित शक्तितत्त्व शाक्त तन्त्रों के भाष्य का स्रोत है। निगम तथा आगम में मुख्य भेद यही है कि जहाँ निगम अपने सिद्धान्तों तथा कर्मकाण्डों को त्रिवर्णों (ब्राह्मण, क्षत्रिय, वैश्य) के लिए सीमित करता है, वहाँ आगम प्रत्येक वर्ण- स्त्री तथा शूद्रों के लिए भी साधना का द्वार खोल देता है। निगम ज्ञान प्रधान है और आगम क्रिया प्रधान है।

**तान्त्रिक आचार** - शाक्त मत में पशुभाव, वीरभाव और दिव्यभाव संज्ञक तीन भाव हैं। इसमें वेदाचार, वैष्णवाचार, शैवाचार, दक्षिणाचार, वामाचार, सिद्धान्ताचार तथा कौलाचार नामक सात आचार होते हैं। ये सात आचार पशु आदि तीनों भावों से सम्बद्ध हैं। भाव मानसिक स्थिति है और आचार बाह्य आचरण। जिस जीव में अविद्या-निवृत्ति न होने से अद्वैत ज्ञान का लेशमात्र भी उदय नहीं हुआ है, उसकी मानसिक अवस्था 'पशुभाव' कहलाती है। जो जीव अद्वैतज्ञान रूप अमृत सरोवर की कणिकामात्र का आस्वादन कर अज्ञानपाश को काटने में सफल होता है, उसकी मानसिक अवस्था 'वीरभाव' कहलाती है। जो साधक जीव वीरभाव से पुष्ट होकर द्वैतभाव के निराकरण में समर्थ होता है और उपास्यदेव की सत्ता में अपनी सत्ता को डुबो कर अद्वैतानन्द का आस्वादन करता है, उसकी मानसिक अवस्था 'दिव्यभाव' कहलाती है। उपर्युक्त आचारों में प्रथम चार आचार- वेद, वैष्णव, शैव तथा दक्षिण पशुभाव के लिए, वाम तथा सिद्धान्त वीरभाव के लिए तथा श्रेष्ठ कौलाचार पूर्ण अद्वैत की भावना से भावित दिव्यभाव के लिए है।

भास्करराय के अनुसार अद्वैत भावना से पूर्ण तथा विशुद्ध साधक ही कौलपदवाच्य है। कौल वह साधक है जो अद्वैत निष्ठा में, पूर्णतया प्रतिष्ठित हो चुका है। उसकी अद्वैत भावना में कर्दम तथा चन्दन में, शत्रु तथा प्रिय में, श्मशान तथा भवन में, काञ्चन तथा तृण में, भेदबुद्धि नहीं रहती है— कर्दमे चन्दनेऽभिन्नं पुत्रे शत्रौ तथा प्रिये। श्मशाने भवने देवि! तथैव काञ्चने तृणे।। न भेदो यस्य देवेशि स कौलः परिकीर्तितः। (भावचूडामणितन्त्र) कौल साधकों के विषय में यह प्रसिद्धि है कि वे हृदय से शाक्त, बाहर से शैव और सभा में वैष्णव दृष्टिगोचर होते हैं—

**अन्तःशाक्ताः बहिः शैवाः सभामध्ये तु वैष्णवाः।**
**नानारूपधराः कौला विचरन्ति महीतले।।**

इस प्रसिद्धि में कौल साधकों में शक्ति, शिव और विष्णु में निष्ठा-समन्वय की झलक मिलती है।

तन्त्रविद्या में कौलाचार के अतिरिक्त 'श्रीविद्या' के उपासकों का भी एक आचार है जो 'समयाचार' के नाम से प्रसिद्ध है। आचार्य शंकर इसी समयाचार के अनुयायी थे। समयाचार में अन्तर्याग की प्रधानता होती है। समय का अर्थ है - हृदयाकाश में चक्र की भावना कर पूजाविधान। इसमें मूलाधार में सोयी हुई कुण्डलिनी को जगाकर स्वाधिष्ठानादि चक्रों से होकर सहस्रार चक्र में विराजमान सदाशिव के साथ संयोग कर देना प्रमुख आचार है। लक्ष्मीधर के अनुसार आधार चक्र की प्रत्यक्ष रूप से पूजा करने वाला तान्त्रिक 'कौल' तथा उसकी भावना करने वाला उपासक 'समयमार्गी' कहलाता है।

**तन्त्र का प्रामाण्य** - तन्त्रों की प्रामाणिकता के विषय में दो मत हैं - परतः प्रामाण्य तथा स्वतः प्रामाण्य। भास्करराय तथा राघवभट्ट श्रुत्यनुगत होने से तन्त्रों का परतः प्रामाण्य मानते हैं। परन्तु श्रीकण्ठाचार्य तन्त्रागम का श्रुति के समान स्वतः प्रामाण्य स्वीकारते हैं। कुलार्णव तन्त्र (२.१४०) कौल आगम को वैदिक शास्त्र कहता है। कुल्लूक भट्ट ने मनुस्मृति (२.१) की टीका में हारीत ऋषि का एक वाक्य उद्धृत कर तन्त्र को वेद के समान श्रुति कहलाने की योग्यता का समर्थन किया है। इन मतों के अनुसार तन्त्र की प्रामाणिकता श्रुति के समान है और वह वेद के समान ही स्वतः प्रमाण है।

**तन्त्र-भेद** - तन्त्रों के मुख्यतः तीन प्रधान भाग हैं - ब्राह्मणतन्त्र, बौद्धतन्त्र तथा जैनतन्त्र। ब्राह्मणतन्त्र भी उपास्य देवता की भिन्नता के कारण तीन प्रकार के होते हैं - (१) वैष्णवागम (पाञ्चरात्र), (२) शैवागम, (३) शाक्तागम। इनमें क्रमशः विष्णु, शिव तथा शक्ति की परा देवता के रूप में उपासना विहित है। दार्शनिक सिद्धान्तों के भेद से आगम भी द्वैत प्रधान, अद्वैत प्रधान और द्वैताद्वैत प्रधान हैं। रामानुज के अनुसार पाञ्चरात्र आगम विशिष्टाद्वैत का प्रतिपादक है। शैवागम में तीनों मतों की उपलब्धि होती है, परन्तु शाक्तागम में सर्वथा अद्वैततत्त्व का प्रतिपादन मिलता है।

आधुनिक गवेषणा भी इस निष्कर्ष पर पहुँची है कि वैदिक धारा की जो उपासना की दिशा है, वह अविभाज्य रूप से बहुत अंशों में तान्त्रिक धारा से मिली हुई है और बहुत से तान्त्रिक विषय अति प्राचीन काल से परम्परा क्रम से चले आ रहे हैं। वस्तुतः वेद और तन्त्र का निगूढ तत्त्व एक ही प्रकार का है। दोनों ही शब्दात्मक ज्ञानविशेष हैं। ये शब्द लौकिक न होकर दिव्य और अपौरुषेय हैं। मन्त्रद्रष्टा इसी गूढ रहस्य को जानकर सर्वज्ञ होते थे। पुराकल्प में लिखा है— यां सूक्ष्मां विद्यामतीन्द्रियां वाचं ऋषयः साक्षात्कृतधर्माणः मन्त्रदृशः पश्यन्ति तामसाक्षात्कृतधर्मेभ्यः प्रतिवेदयिष्यमाणा बिल्मं समामनन्ति, स्वप्नदृष्टमिव दृष्टश्रुतानुभूतम् आचिख्यास्यन्ते।

वस्तुतः वेद और तन्त्रागमों की मौलिक दृष्टि एक ही है। वैदिक और तान्त्रिक विचार धारायें भारतीय संस्कृति की आत्मा हैं। जैसे अनेक जलधारायें नदीरूप में समवेत होकर

समुद्र में मिल जाती हैं, वैसे ही वैदिक तान्त्रिक आदि संस्कृति-धारायें परम तत्त्व में समाहित होती हैं।

तान्त्रिक संस्कृति में मूलतः साम्य होने पर भी देश, काल और क्षेत्र के भेद से उसमें विभिन्न सम्प्रदायों का उदय हुआ है। विभिन्न तांत्रिक सम्प्रदायों में आपाततः वैषम्य परिलक्षित होने पर भी उनमें निगूढ रूप से मार्मिक साम्य है। उपास्यभेद के कारण उपासना-प्रक्रिया और आचारादि में भेद होने पर भी सबमें मूल तत्त्व समान हैं।

तान्त्रिक-साधना का भी लक्ष्य है - मानव जीवन की पूर्णता-अनादि अविद्या से जग कर पूर्ण प्रबोधन- प्रबुद्धः सर्वदा तिष्ठेत्।

**द्वैतशैवदर्शन और उसके आचार्य** -भारतवर्ष में शैवदर्शन एक प्राचीन धार्मिक सम्प्रदाय हैं। ऋग्वेद में रुद्ररूप से शिव के स्वरूप के प्रतिपादक बहुत से मन्त्र उपलब्ध हैं। भारत में इस सम्प्रदाय का उदय कहाँ और कब हुआ, इस विषय में कुछ मतभेद हैं। द्रविड़-आम्नाय के विद्वान् इस सम्प्रदाय का उदय द्रविड़देश में मानते हैं। उनके अनुसार अत्यन्त प्राचीन काल में शिव तथा शिवपूजा का सर्वप्रथम आविर्भाव द्रविड़ देश में ही हुआ था। उसके बाद ही उत्तर भारत के आर्यों ने वेदों और पुराणों में द्रविड़देशीय मतानुसार शिव तथा उनकी उपासना-विधि का विपुल विस्तार किया। परन्तु यह मत समीचीन नहीं है, क्योंकि द्रविड़ शैव धर्म वेद से प्राचीन नहीं है। द्रविड शैवाम्नायों में शिववाचक शब्दों का मूल भी संस्कृत ही है। 'पुलनाणूर' नामक प्राचीन संगम कालिक ग्रन्थ में शिव का नाम 'वलैमिट-लण्णल्' निर्दिष्ट है। उस नाम का अर्थ है 'नीलकण्ठ'। यह दो शब्दों का समस्त रूप है। दूसरे ग्रन्थों में 'चिवन्', 'चेम्पु' ये दो नाम मिलते हैं। वहाँ 'चिवन्' यह द्रविड़ शब्द संस्कृत के 'शिव' शब्द का प्रतिरूपक है। शिव का 'चेम्पु' यह नाम लोहित (रक्त) वर्ण को अभिव्यक्त करता हैं। गौर वर्ण के सुनहले प्रकाशमय शिव के लिए यह नाम उचित प्रतीत होता है। अनेक वेदमन्त्रों में शिव 'कृष्णपिङ्गल' इस शब्द से अभिहित हैं। वहाँ विष धारण करने से कण्ठ की कृष्णवर्णता और शुभ्र शरीर होने से देह की पिङ्गलरूपता उस नाम के रहस्य का द्योतक है। पुराणों में 'कृष्णपिङ्गल' के स्थान पर 'नीललोहित' शब्द का प्रयोग भी उसी अभिप्राय को व्यक्त करता है। इस प्रकार शिव के लिए वैदिक रुद्र शब्द का प्रयोग यह सिद्ध करता है कि शिव आर्य देवता हैं न कि द्रविड देवता और उनका पूजनविधान आर्यदेश में ही विहित है, भले ही बाद में द्रविड देश में भी शिव तथा उनकी पूजा-विधि का प्रचलन हो गया हो।

अग्नि के उपासक वैदिकों के धर्म में लिङ्गात्मक रूप से उपास्य शिव का आविर्भाव किस प्रकार हुआ, इस विषय में मेरा अभिमत है कि वैदिक संहिताओं में शिव ही रुद्र नाम से अभिहित हुए हैं। अथर्ववेद (११.२.६) में स्तुतिप्रसङ्ग में शिव ही भव, शर्व, पशुपति, भूपति आदि नामों से कहे गये हैं। वहाँ 'पशुपति' नाम में 'पशु' शब्द न केवल गो आदि चतुष्पद जन्तु का वाचक है, वरन् द्विपद पुरुष का भी द्योतक है। यथा—

तवेमे पञ्च पशवो विभक्ता गावो अश्वा पुरुषा अजावयः।
(अथर्ववेद)

ऋग्वेद में अग्नि ही रुद्रनाम से अभिहित है। अग्नि और रुद्र के एकतापरक कतिपय मन्त्र हैं —

(क) त्वमग्ने रुद्रो असुरो महो दिवः।
(ऋग्वेद २।१।६)

(ख) यो अग्नौ रुद्रो य अप्स्वन्तर्य ओषधीर्विरुध आविवेश।
य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वग्नये।।
(अथर्ववेद ८।८७।१)

(ग) अग्निर्वै स देवः। तस्यैतानि नामानि। शर्व इति प्राच्या
आचक्षते। भव इति यथा वाहीकाः। पशूनां पती
रुद्रोऽग्निरिति तान्यस्याशान्तान्येवेतराणि नामानि।
अग्निरित्येव शान्ततमम्। (शत. ब्रा. १।७।३।८)

उपर्युक्त उद्धरणों के अनुशीलन से यह प्रतीत होता है कि रुद्र ही अग्निरूप हैं। शतपथ ब्राह्मण तो यही निर्दिष्ट करता है कि प्राची दिशा में रुद्र शर्व नाम से और पश्चिम दिशा में भव नाम से व्यवहृत थे। शर्व और भव की एकरूपता होने पर भी उन-उन देशों की प्रसिद्धि के अनुसार नाम-भेद दृष्टिगोचर होता है।

आज की शिवोपासनापद्धति भी इसी तथ्य की पुष्टि करती है। 'जलधारी' इस नाम से प्रसिद्ध स्थान के मध्य में ऊर्ध्वमूल शिवलिङ्ग विराजमान है। 'अभिषेकप्रियः शम्भुः' इस वचन के अनुसार जल के अभिषेक से ही शिव अत्यधिक प्रसन्न होते हैं। भस्म-धारण शैवों का मुख्य कर्तव्य है। यह सार्वकालिक और सार्वभौम उपासनामार्ग शिवपूजा की अग्निपूजा से समता का संकेत देता है। 'जलधारी' यह प्रसिद्ध स्थान अग्नि का वेदिरूप है। उसके बीच विराजमान ऊर्ध्वमूल शिवलिङ्ग वेदि के मध्य प्रदीप्त अग्नि का स्तूप है। इस विषय में शिवलिङ्ग के लिए 'ज्योतिर्लिङ्ग' शब्द का व्यवहार भी प्रमाण है। यज्ञ में अग्नि से निष्पन्न भस्म को याज्ञिक लोग पवित्र बुद्धि से धारण करते हैं। रुद्र ही अन्तरिक्ष में विद्यमान अग्निरूप विद्युत् के अध्यक्षरूप से वेदों में बार-बार कथित हैं। इसीलिए अथर्ववेद में कोई ऋषि विद्युत्पात से अपनी रक्षा के लिए रुद्र से प्रार्थना करता है—

**मा नो रुद्र तक्मना मा विषेण**
**मा नः सं स्रा दिव्येनाग्निना।**
**अन्यत्रास्मद् विद्युतं पातयैताम्।। (अथर्ववेद ११। २। २६)**

हम अग्नि के दो रूपों का नित्य साक्षात्कार करते हैं। उनमें एक है घोरा तनुः और दूसरा है अघोरा तनुः। अग्नि का प्रथम रूप भीषण और प्राणियों के लिए भयप्रद है। द्वितीय रूप है प्राणियों की सुखसमृद्धि और नित्य कल्याण का सम्पादक। जगत् संहारक रुद्र भी सृष्टिकर्म में प्रवृत्त होते हैं। इसीलिए महाकवि कालिदास ने अग्नि की संहारकारिणी शक्ति की उपादेयता का वर्णन इस प्रकार किया है—

**कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो**
**बीजप्ररोहजननीं ज्वलनः करोति। (रघुवंश ६।८०)**

जिस प्रकार सृष्टि में प्रलय का बीज निहित है, उसी प्रकार प्रलय में भी सृष्टि का बीज अन्तर्निहित है। सृष्टि और प्रलय परस्पर सापेक्ष हैं। इसीलिए जो रुद्र है वही शिव है। अग्नि की घोरा तनु का प्रतीक रुद्र और अघोरा तनु का प्रतीक शिव हैं। इस प्रकार रुद्र और शिव की अभेदरूपता निर्विवाद है।

**शैव सम्प्रदाय** -शैव सम्प्रदाय में द्वैतशैवतथ्य-प्रतिपादक दो सम्प्रदाय हैं— (१) पाशुपतदर्शन, (२) शैवसिद्धान्तदर्शन। इनमें पाशुपतदर्शन से सम्बद्ध ग्रन्थों के प्रकाशित न होने से इस दर्शन के तत्त्वों का सम्यग् ज्ञान नहीं हो पाता, परन्तु प्राचीन काल में इसका बहुत प्रचार था। ब्रह्मसूत्र का 'पत्यधिकरण' दार्शनिकों की दृष्टि में पाशुपत मत का खण्डन करता है। यह अधिकरण किस शैवमत का खण्डन करता है, इसमें एकमत नहीं है। कुछ विद्वान् वहाँ नकुलीश पाशुपत तन्त्र का खण्डन मानते हैं, किन्तु यह समीचीन नहीं है। 'पत्युरसामञ्जस्यात्' (ब्रह्मसूत्र २.२.३७) इस सूत्र के भाष्य में शंकराचार्य का कथन है— "माहेश्वरास्तु मन्यन्ते कारणकार्ययोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाश-विमोक्षणाय उपदिष्टाः। पशुपतिरीश्वरे निमितकारणमिति वर्णयन्ति"। शंकराचार्य के भाष्यघटक इस वाक्य समूह की टीका करने वाले वाचस्पति मिश्र ने "भामती" में जो निर्देश दिया है, उसके अनुसार पाशुपत दर्शन का द्वैतरूप ही स्पष्ट होता है। वाचस्पति मिश्र की व्याख्या इस प्रकार है—

चत्वारो माहेश्वराः—शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकाश्च। चत्वारोऽप्यमी महेश्वरप्रणीतसिद्धान्तानुयायित्वाद् माहेश्वरा एव। तेषाम् (माहेश्वराणां) अभिसन्धिः - "चेतनस्य खल्वधिष्ठातुः कुम्भकारादेः कुम्भादिकार्ये निमित्तकारणत्वमात्रं न तूपादनत्वमपि तस्मादिहापीश्वरो जगत्कारणं निमित्तमेव न तूपादानमपि, एकस्याधिष्ठातृत्वाधिष्ठेयत्वविरोधात्"। अतो निमित्तोपादानकारणयोः परस्परभेदस्वीकाराद् न्यायवैशेषिकवद् इदं दर्शनं द्वैतभावनामेव पुष्णाति। अत एवात्र द्वैतपाशुपततन्त्रस्यैव मतनिराकरणम्, न तु नकुलीशपाशुपतस्य, द्वैताद्वैतप्रतिपादनपरत्वात् तस्य दर्शनस्येति दिक्।

